(2B)






वाराणसेयसंस्कृतविश्वविद्यालय-

# दर्शनपरिषद्

(परिचय-पत्रम्)

१९६७ ई०

दर्शनपरिषदो दिङ्निर्देशकेषु चतुर्णां स्वर्गीयाचार्य-
नरेन्द्रदेव-विश्वविख्यातमनीषिमहामहोपाध्याय-
पण्डितगोपीनाथकविराज-डा० सम्पूर्णानन्द-
प्रोफेसर को० अ० सुब्रह्मण्यअय्यर-
महोदयानां परिषदः शुभारम्भे
समुदीरित शुभाशंसनवचनानि परपृष्ठे

# दिङ्निर्देशः

यह जानकर बड़ी प्रसन्नता हुई कि आपके यहां दर्शनपरिषद् की स्थापना होने जा रही है। दर्शन के अध्ययन के लिये दृष्टिकोण का उदार होना अत्यन्त आवश्यक है। यह खुशी की वात है कि इधर कुछ दिनों से संस्कृत कालेज में अन्य भारतीय दर्शनों के साथ वौद्धदर्शन के अध्ययन के लिये प्रवन्ध किया गया है। भारतीय दर्शन एवं संस्कृति के विकास में वौद्ध और जैन दर्शनों ने महत्त्वपूर्ण योगदान किया है। इनके अध्ययन के विना भारतीय दर्शन का अध्ययन अधूरा है। ·· वर्तमान भारत का निर्माण उदारभाव के द्वारा ही होगा, साम्प्रदायिक वुद्धि उसमें वाधा उपस्थित करेगी। इतना विशाल देश, इतने विपुल प्राकृतिक साधन, इतनी विपुल जनसंख्या, इतनी प्राचीन उदार संस्कृति के होते हुए एक क्षुद्र गड्डिका में रहने का बुरा अभ्यास खटकता है। विशाल देश के वासियों का हृदय भी विशाल होना चाहिए, नहीं तो उसकी भौगोलिक विशालता भी नष्ट हो जायेगी।······पुनः हमको युग-धर्म भी पहचानना चाहिए। यह युग समानता, राष्ट्रीयता और जनतन्त्र का है। आशा है, दर्शन-परिषद् इस ओर उत्तरोत्तर प्रगति करेगी।

न्यू हैदरावाद
लखनऊ

नरेन्द्रदेव
२०।९।५५

(२)

दर्शनपरिषदः शुभारम्भः श्रीमद्भिर्मुख्यमन्त्रिमहोदयैः शुद्धभाद्रशुक्लद्वितीयायां विधास्यत इति ज्ञात्वा, परिषदः परिकल्पितोद्देश्यानि विमृश्य च भृशं नन्दितोऽस्मि। विद्वद्भूयिष्ठा परिषदियं सूचनापत्रनिर्दिष्टं स्वार्थं सर्वथा सम्पाद्य, जनशुभकरमर्थान्तरमपि जनचित्तोत्कर्षविधानप्रयत्नेन सम्यक् सम्पादयिष्यतीति मे दृढो विश्वासः। कल्याणीयं परिषत् चिरं जीवतु।

सिगरा,
वाराणसी।

कविराजोपाह्वगोपीनाथशर्मणः
१७-९-५५

(३)

दर्शनशास्त्रं खलु न केवलमध्ययनस्य विषयः, प्रत्युत सामाजिकां व्यवस्थां परिवर्तयितुमपि तत् क्षममस्ति। इदानीमस्माकं देशोऽभिनवं रूपं गृह्णन्नास्ते। आशास्यते, यद् वाराणसीतो भवन्त एतादृशीं दार्शनिकीं विचारसरणिं पुरष्करिष्यन्ति, यामनुगम्य एतत्सकलं निर्माणं शिवाय सत्याय च भविष्यति। ···संस्कृतभाषायास्तदुपलब्धपुस्तकानां चाध्ययनमात्रेण तावत् सकलमभिलषितं न सेत्स्यति, यावत् तेन मानवानामाध्यात्मिकी क्षुत् निवृत्ता न भवेत्। अस्यां दर्शनपरिषदि दर्शनस्य साङ्गोपाङ्गमध्ययनं भविष्यति, किन्तु तावन्मात्रेणास्याः साफल्यं न मन्तव्यम्। सम्यक्साफल्यायाद्यतनानां नवानां जिज्ञासानां समाधये यतितव्यम्। येषां पूर्वजैः पुरा नव्यानि दर्शनानि प्रकटितानि कथं न तैरिदानीमभिनवं दर्शनमाविष्कर्तुं पार्यते।

···अनेकशताब्द्यनन्तरमयं देशः स्वातन्त्र्यमवाप। अस्य स्वतन्त्रदेशस्य स्वरूपं किंविधं भवेदित्यद्याप्यचिन्तितप्रायमेवास्ति। मन्ये, उद्घाटितयाऽनया परिषदा एतत्सर्वं कार्यं सम्पत्स्यत इति।

**सम्पूर्णानन्दः**
२८-११-१९५५

(४)

समयानुगुणोऽयं दर्शनपरिषत्स्थापनसमारम्भः। यथा यथा भारतीयदर्शनगतानां तत्त्वानामवबोधो वर्द्धते, तेषु तेषु देशेषु, तथा तथा भारतीयप्रजासु भारतीयसंस्कृतौ चादरो वर्द्धते विदेशीयानाम्। एशियाद्वीपान्तर्गततत्तद्देशनिवासिनीनां मनुष्यजातीनां संस्करणे भारतभूमिसमुत्पन्नेन बौद्धदर्शनेनानेकवर्षशतानि यावत् प्रयत्नः कृतः क्रियते चाधुनापीतीदं तत्त्वं तेषु तेषु समुपलभ्यमानानां बौद्धधर्मस्य बौद्धदर्शनस्य च विशिष्टरूपाणां सम्यगध्ययनेनैवावगन्तुं शक्यते। तिब्बत-चीन-ब्रह्म-सुह्म-सिंहलादिदेशेभ्यो दर्शनपरिषदा निमन्त्रितानां बौद्धदर्शननिष्णातानां विदुषां वाचः श्रवणं सुलभं भवत्विति प्रार्थयते।

**को० अ० सुब्रह्मण्य-अय्यरः**

## वाराणसेयसंस्कृतविश्वविद्यालय–

# दर्शनपरिषद्

पञ्चपञ्चाशदुत्तरैकोनविंशतिशततमे ईशवीये वर्षे नवम्बरमासस्याष्टाविंशे दिनाङ्के कार्तिकशुक्लचतुर्दश्याम् एकादशोत्तरद्विसहस्रतमे (२०११) वैक्रमाब्दे दर्शनपरिषत् समस्थाप्यत। उत्तरप्रदेशस्य मुख्यमन्त्रिणां डा० सम्पूर्णानन्दमहाभागानामुद्घाटनभाषणसमकालमेवास्या शुभारम्भोत्सवः समपद्यत। विशिष्टेऽस्मिन् समारोहे काशीस्था दार्शनिका, अन्ये विख्याता विद्वांसः समवेताः समभवन्। वैदेशिका अपि विद्वांसश्छात्राश्च प्रायः शतसंख्याकाः फ्रांस-जर्मन-इटली-तुर्की-बर्मा-श्याम-चीन-तिब्बत-लद्दाखादिदेशप्रदेशवासिनः संसदि स्वोपस्थित्याऽऽन्ताराष्ट्रियां काञ्चित् परमां सुषमां समापादयन्। प्रारम्भादेव परिषदियं स्वर्गीयाचार्यनरेन्द्रदेवमहोदयानां महामहोपाध्यायानां पण्डितश्रीगोपीनाथकविराजमहाभागानां प्रो० को० अ० सुब्रह्मण्य-अय्यरमहाशयानां चाशीर्वचोभिः सद्भावैश्च सम्भाविता। किंच शुभारम्भ एवास्या उद्देश्यकार्यक्रमनिर्धारणप्रसङ्गेन म० म० श्रीगोपीनाथकविराजमहाभागैरन्यैश्च मनीषिभिः स्वकीयप्रौढपरामर्शदानेनानुगृहीता। परिषदः समधिकोपयोगित्वसाधनायेदमाकूतं यदनया तान्येव महत्त्वपूर्णानि कार्याणि विशेषेण सम्पाद्येरन् येषु विद्वांसः प्राय उदासते, यद्वा येषां पूर्त्तिः साम्प्रतिकदर्शनशिक्षया नैव सम्पाद्यत इति। तदेवमत्रायोजने दर्शनेषु प्रचलितामध्ययनाध्यापनरीतिं विशेषतोऽभिलक्ष्य संस्कृतज्ञानां हिताय परिषदुद्देश्यसिद्धये चादौ लक्ष्यत्रिसूत्री निर्मिता।

उद्देश्यानि—

१. सामाजिकजीवनस्याधारभूतानां दार्शनिकतत्त्वानामाकलनं तदुन्नयनं च।

२. कस्मिंश्चिदेकस्मिन् दर्शने प्रौढपाण्डित्यसंपादनाय तदितरविभिन्नदर्शनानां परिचयात्मकमध्ययनम्।

३. अभिनवानां प्राच्यप्रतीच्यदर्शनानां तुलनात्मकं समीक्षात्मकं चाध्ययनम्।

## कार्यक्रमः

उक्तोद्देश्यपूर्त्तये व्याख्यानमाला, दर्शनगोष्ठीषु निबन्धपाठः, छात्राणां भाषणं वादविवादश्चेति त्रिविधं कार्यमनुष्ठेयमस्ति। अत एव षट्पञ्चाशदुत्तरैकोनविंशतिशततमे ( १९५६ ) वर्षे दर्शनानां केषांचिद् विशिष्टविचारणीयविषयाणामेकां सूचीं प्रकाश्य, यथासमयं विशिष्टविदुषां सविधे च तां संप्रेष्य, निबन्धाः समानायिताः। एवमागतानां निबन्धानां गोष्ठीपठितनिबन्धानां च प्रकाशनं यथाक्रमं संस्कृतविश्वविद्यालयस्य 'सारस्वती सुषमा' इत्यभिधायां मुखपत्रिकायां विधीयते। उक्तपत्रिकायां "दर्शनपरिषदङ्क" इति नाम्ना दर्शनस्यैको विशिष्टाङ्कोऽपि प्रकाशितः।

परिषदायोजितपरिचर्चादिगोष्ठीषु 'मानाधीना मेयसिद्धिर्मेयाधीना मानसिद्धिर्वा', 'ज्ञानस्य निराकारत्वेऽद्वैतवादिवाह्यार्थसत्त्ववादिनोः को विशेषः', 'मनसः स्वरूपम्', 'भारतीयदर्शनेषु प्रत्यक्षम्', 'दृष्टिसृष्टिवादः', 'कणाद आस्तिको न वा' इत्याद्यनेकविधविषयानवलम्ब्य निबन्धपाठाः, भाषणानि, तत्त्वबुभुत्सूनां चर्चाश्च सम्यक् सम्पन्नाः। परिषदा छात्रेषु वादशास्त्रार्थाभिलाषसम्वर्धनायाऽऽयोजितगोष्ठीषु 'ईश्वरकर्मणोरेकतरेणोभयेनानुभयेन वा जगद्व्यापारसिद्धिः', 'दर्शनानि धर्मानुरोधेन प्रवर्त्तन्ते स्वातन्त्र्येण वा', 'जीवब्रह्मणो भेदोऽभेदो वा', 'जगतो मिथ्यात्वस्वरूपम्' इत्यादिविषयानधिकृत्य भाषणानि वादाश्च समजनिषत।

## विशिष्टाधिवेशनक्रमः

१९६० वर्षे निर्णीतं यदस्याः परिषद ईदृशो विकासः क्रियेत येनासौ देशस्य संस्कृतविदुषां कृते विश्वविख्याताखिलभारतीयदर्शनपरिषदनुरूपमखिलभारतीयप्राच्यविद्यापरिषदनुरूपं वा महत्वपूर्णं कार्यं कर्तुं शक्नुयात्। उक्तोभयपरिषदोराभ्यन्तरवाह्योभयरूपेणांग्लभाषया ईदृशं दुर्भेद्यं कवचमस्ति यत्र संस्कृतहिन्दीप्रभृतिभाषाणां प्रवेशोऽद्यापि सुदुःशकः।

संस्कृतसाहित्यस्य विकासः, प्राचीनसंस्कृतविदुषां विचारसरणिस्तदभिव्यक्तिपद्धतिश्चेतरेभ्यो भिद्यन्ते। एतदर्थमिदमावश्यकं यत्प्राचीनपरम्परयैव सौविध्यप्रोत्साहनादिप्रदानेन संस्कृतज्ञेषु कापि प्रशस्ता समालोचनप्रणाली विकासमियात् यया प्राक्तनदर्शनानां भूयोऽपि मौलिकं प्रातिस्विकं च समीक्षणं विकासश्च क्रियेताम्, तेनैव च साकमभिनवदर्शनानां सुष्ठु परिशीलनेन इदानीन्तनलौकिकसमस्यानां किमपि दार्शनिकं समाधानमपि कर्तुं पार्येत।

उपर्युक्तनूतनप्रगतिपथमाश्रित्य दर्शनपरिषदो विशिष्टाधिवेशनायोजनमपि लक्ष्यतया स्वीकृतम् । एतल्लक्ष्यपूर्त्तये संस्कृतविश्वविद्यालयः समुपयुक्तं स्थानम् । प्रायेण निखिलसंस्कृतवाङ्मयस्य दर्शनेन सह साक्षात्परम्परया वा अध्यात्मविशेषः संबन्धः समस्तीत्यालोच्य परिषत्समित्या दर्शनपरिषदः संघटनं विश्वविद्यालयस्यानुगुण्येनायोजितं न तु केवलं विभिन्नदर्शनविभागानामिति । इदमप्याशासितं यदस्मिन् विश्वविद्यालयेऽस्याः क्रमिको विकास ईदृशो भवेत्, यदस्यामुत्तरोत्तरमधिकविद्यानां विभिन्नविषयकविदुषां च संग्रहः संपद्येत । एतत्सर्वं यथार्थयितुं जनवरीमासस्य १७, १८, १६ ( १९६१ ई० ) दिनेषु परिषदोऽधिवेशनमायोजितम्, समपाद्यत च ।

तत्र डा० सम्पूर्णानन्दमहोदयानां प्रधानाध्यक्षत्वे द्वे प्रधानसभे, सुविख्यातयशसां श्रीरघुनाथशर्म-महामहोपाध्यायकालीपदतर्काचार्य-डाक्टरसातकरीमुखोपाध्याय-डा०कान्तिचन्द्रपाण्डेयमहाभागानाम् आध्यक्ष्येषु क्रमशो वेदान्त-न्याय-बौद्ध-शैवागमानां चतस्रः परिषदः सम्पन्नाः, एवञ्च, १९६२ ईशवीये ११, १२, १३, १४ दिनेषु प्रो० को० अ० सुब्रह्मण्य-अय्यरमहोदयानां प्रधानाध्यक्षत्वे पण्डितकालीप्रसादमिश्र-रामचन्द्रशास्त्रि-नरसिंहाचार्य-रामचन्द्रशास्त्रिदीक्षित-डा० सातकरीमुखोपाध्याय-पण्डितराजराजेश्वरशास्त्रिणामाध्यक्षे क्रमशो व्याकरण-मीमांसा-वैष्णव-अद्वैत-प्राच्यप्रतीच्य-न्यायदर्शनानां षट् परिषदः सम्पन्नाः । इत्थम् अधिवेशनेषु परिषत्सु गोष्ठीषु च शताधिकाः पठितनिबन्धाः संस्कृतविश्वविद्यालयशोधपत्रिकायां सारस्वती सुषमायां' विशिष्टाङ्केषु सामान्याङ्केषु च प्रकाशिताः सन्ति ।

इदानीं ( १९६७ ई० ) समायोजयिष्यमाणाधिवेशने सन्तजीवनदर्शन-वेदान्तदर्शन-जैनदर्शन-न्यायदर्शन-प्राच्यप्रतीच्यदर्शनसमीक्षा-बौद्धदर्शनानां षट् परिषदः परिचर्चागोष्ठ्यश्च विधास्यन्ते । तत्राखिलभारतीयदार्शनिकानां प्राच्य-पाश्चात्यदर्शनविदां विदुषां च समाहारः स्यात् ।

## निबन्धपाठः

अत्र महाधिवेशनेषु विभिन्ना दर्शनगोष्ठ्यो भवन्ति, यासु विपश्चितां गवेषणात्मका आलोचनात्मकाश्च निबन्धाः पठ्येरन्, पठितनिबन्धानां प्रकाशनं च "सारस्वती सुषमा" इति पत्रिकायां द्रागेव संपाद्येत । अधिवेशनगोष्ठीभ्यः प्राक् पश्चाच्च विश्वविद्यालयेऽधिसत्रं यथासमयमन्यान्यविविधप्रकारा दर्शनगोष्ठ्यः समायोज्येरन्, यासु निबन्धपाठभाषणादीनि स्युरिति ।

निबन्धविषये सर्वाण्येव दर्शनानि सामान्येन वृतानि, किन्तु येषां दर्शनानामध्ययनाध्यापनपरम्परा विलुप्तप्राया विरलत्वं वा गता, तेषामध्ययनाध्यापनोज्जीवनाय तत्संबद्धा गवेषणात्मका: परिचयात्मकाश्च निबन्धा: स्वीकृता भवेयुः। प्रचलितदर्शनविषयेषु तूत्कृष्टकोटिका: समालोचनात्मका एव निबन्धा विशेषत: प्रोत्साहनीयाः स्वीकार्या वा स्युः। भारतीयदर्शनानां प्राच्य-प्रतीच्यदर्शनानां च तुलनात्मकमध्ययनं सविशेषं प्रोत्साहनीयम्।

संस्कृत-पालि-प्राकृत-हिन्दयन्यतमैव भाषा निबन्धभाषया निर्णीता। अन्यभाषालिखिता निबन्धा अपि स्वीकरिष्यन्ते। विदेशीयभाषालिखितनिबन्धास्तु हिन्दीभाषयांऽऽग्लभाषया वा प्रकाशनार्थं स्वीकृता भविष्यन्ति। सर्वविधा निबन्धाः संस्कृतभाषामया एव प्राकाश्यमेष्यन्ति। पालि-प्राकृत-हिन्दीभाषामया निबन्धा मूलरूपेणैव प्रकाशयिष्यन्ते। अस्वीकृता निबन्धा लेखकेभ्य: परावर्तयिष्यन्ते।

## भाषणम्

विशिष्टविदुषां भाषणानि भविष्यन्ति। भाषणस्य भाषा हिन्दीसंस्कृतमिति द्वयोरेकतरैव निश्चिता विद्यते। अन्यभाषाविदामपि विदुषां भाषणानि कारयिष्यन्ते। तेषामनुवादव्यवस्था च भविष्यति।

## निवेदनम्

परिषद: साफल्यं विदुषां साहाय्याधीनम्। अद्यत्वे प्रचलितसंस्कृतशिक्षाविधौ निबन्धादिलेखनाभ्यासो न्यूनतां गत:। विद्वांसोऽप्यस्यां दिशि नोत्सहन्ते, किन्तु विद्यायामभिनवविचाराभिवृद्धिदृष्ट्या तथा प्राचीनविचाराणां गभीरज्ञानदृष्ट्या च निबन्धाधारेण शास्त्राणां समालोचनं नितरामपेक्षितम्। परिषदियमिमां सत्प्रवृत्तिमुज्जीवयितुं नूनं निमित्ततां भजेत यदि विद्वद्धौरेया: स्वकीयप्रकृष्टनिबन्धै: परिषत्समारोहान् सफलयेयु:। अतो विद्वांस: सविनयं निवेद्यन्ते, यत्ते समये-समये स्वकीयनिबन्धप्रेषणद्वारा स्वोपस्थित्या चास्मानुपकुर्वन्त्विति।

## दर्शनपरिषदः कार्यकारिणी-समितिसदस्या अधिकारिणश्च-

अध्यक्षः

डा० गौरीनाथशास्त्री

उपकुलपतिः

उपाध्यक्षाः

श्री बलदेव उपाध्यायः (अनुसन्धान-संचालकः)

,, भगवत्प्रसाद मिश्रः (प्रा० वेदविभागस्य)

,, भिक्षुजगदीशकाश्यपः (प्रा० पालिविभागस्य)

,, बदरीनाथशुक्लः (प्रा० न्यायविभागस्य)

,, हरिरामशुक्लः (अध्यक्षः सांख्य-योगविभागस्य)

मन्त्रिणः

श्रीजगन्नाथ उपाध्यायः मन्त्री

अध्यक्षः बौद्धदर्शनविभागस्य

श्रीसत्यपालवर्मा संयुक्तमन्त्री

अध्यक्षः तुलनात्मकदर्शनविभागस्य

डा० रामशंकरभट्टाचार्यः ,,

अनुसन्धानाध्यापकः

कार्यकारिणीसमितिसदस्याः

श्री प्रस्तोता (वाराणसेयसंस्कृतविश्वविद्यालयस्य)

,, मुरलीधर मिश्रः (प्रा० व्याकरणविभागस्य)

,, अवधबिहारीत्रिपाठी (प्रा० ज्योतिषविभागस्य)

,, रामकुबेरमालवीयः (प्रा० साहित्यविभागस्य)

,, करुणापतित्रिपाठी (प्रा० शिक्षाशास्त्रिविभागस्य)

,, रामप्रसादत्रिपाठी (प्रा० व्या० आ० दर्शनविभागस्य)

,, वेदान्तप्राध्यापकः

,, पुराणप्राध्यापकः

,, विभूतिभूषणभट्टाचार्यः ( पुस्तकालयाध्यक्षः)
,, प्रेमवल्लभत्रिपाठी ( अध्यक्षः धर्मशास्त्रविभागस्य )
,, अमृतलालजैनः ( अध्यक्षः जैनदर्शनविभागस्य )
,, भूपेन्द्रपतित्रिपाठी ( व्याख्याता व्या० विभागस्य )
,, सुरेन्द्रनाथद्विवेदी ( स० प्रा० न्यायविभागस्य )
,, बटुकनाथशास्त्री खिस्ते ( स० प्रा० साहित्यविभागस्य )
,, श्रीकृष्णमणित्रिपाठी ( व्याख्याता पुराण-विभागस्य )
,, शम्भुनाथसिंहः ( अ० हिन्दीविभागस्य )
,, व्रजवल्लभद्विवेदी ( अध्यापकः योगतन्त्रविभागस्य )
,, रघुनाथपाण्डेयः ( अध्यापकः व्या० आगम द० विभागस्य )

# वाराणसेयसंस्कृतविश्वविद्यालय

# दर्शन परिषद्

२८-११-१९५५ ई० को दर्शन-परिषद् की स्थापना हुई। शुभारम्भोत्सव उत्तरप्रदेश के मुख्य मंत्री डा० सम्पूर्णानन्द के उद्घाटन-भाषण से सम्पन्न हुआ। इस समारोह में काशी के दार्शनिक एवं अन्य विद्वानों के अतिरिक्त फ्रांस, जर्मन, इटली, तुर्की, बर्मा, श्याम, लंका, चीन, तिब्बत, लद्दाख आदि देशों के शताधिक विद्वानों की उपस्थिति तथा समर्थन से दर्शन-परिषद् को अन्तर्राष्ट्रिय महत्त्व प्राप्त हुआ। प्रारम्भ में ही इस संस्था को स्वर्गीय आचार्य नरेन्द्रदेव, म० म० पं० गोपीनाथ कविराज, प्रो० को० अ० सुब्रह्मण्य अय्यर के आशीर्वाद एवं समर्थन प्राप्त हुए थे। इसके उद्देश्य कार्यक्रम आदि के निर्माण में आरम्भ से ही म० म० पं० गोपीनाथ कविराज जी आदि ने अपना वहुमूल्य परामर्श दिया है। इस परिषद् को अधिकाधिक उपयोगी बनाने के लिए ध्यान रखा गया कि परिषद् उन महत्त्वपूर्ण कार्यों को विशेषरूप से सम्पन्न करे, जिसकी पूर्ति दर्शन की प्रचलित शिक्षा से प्रायः नहीं हो रही है, अथवा जिसकी ओर विद्वानों में भी उपेक्षा बनी रहती है। स्वभावतः इस आयोजन में संस्कृत विद्वानों के क्षेत्र में दर्शनों के प्रचलित अध्ययनाध्यापन की परिस्थिति को विशेषरूप से ध्यान में रखा गया। इसलिये प्रारम्भ में परिषद् के तीन मुख्य उद्देश्य-सूत्र बनाये गये।

## उद्देश्य तथा कार्यक्रम

१. सामाजिक जीवन के आधारभूत दार्शनिक तत्त्वों का आकलन करना और उसका उन्नयन करना।

२. किसी एक दर्शन में प्रौढ़ पाण्डित्य के सम्पादन के लिए अन्य विभिन्न दर्शनों का परिचय प्राप्त करना।

३. अर्वाचीन प्राच्य और प्रतीच्य दर्शनों की तुलनात्मक एवं समीक्षणात्मक आलोचना करना।

उपर्युक्त उद्देश्य की दिशा में व्याख्यानमाला, दर्शन गोष्ठियों में निबन्ध-पाठ तथा छात्रों का वाद-विवाद एवं भाषण; ये त्रिविध कार्य सम्पन्न होते

रहे हैं। १९५६ में दर्शन के कुछ विशिष्ट विचारणीय विषयों की एक सूची प्रकाशित करके उसे समय समय पर विशिष्ट विद्वानों के पास भेज कर निबन्ध मँगाये गये। इस प्रकार आगत निबन्धों तथा गोष्ठियों में पठित निबन्धों का प्रकाशन समय समय पर संस्कृत विश्वविद्यालय की मुख-पत्रिका 'सारस्वती सुषमा' में होता रहा और दर्शनपरिषदङ्क के नाम से 'सारस्वती सुषमा' का एक विशिष्टाङ्क भी प्रकाशित हुआ।

दर्शन-परिषद् द्वारा आयोजित गोष्ठियों में जिन गम्भीर विषयों पर विद्वानों द्वारा चर्चायें हुई हैं, वे प्रायः निम्नलिखित प्रकार के हैं—'प्रमेय से प्रमाण की सिद्धि अथवा प्रमाण से प्रमेय की सिद्धि', 'ज्ञान की निराकारता में अद्वैतवादी एवं बाह्यार्थवादियों का दृष्टिभेद', 'भारतीय दर्शनों में मन का स्वरूप', 'भारतीय दर्शनों में प्रत्यक्ष' 'दृष्टिसृष्टिवाद' 'कणाद आस्तिक थे या नहीं' आदि। इसी प्रकार छात्रगोष्ठियों में वाद के लिये निम्नलिखित प्रकार के विषय स्वीकार किये गये, यथा—'ईश्वर और कर्म में किसी एक से, दोनों से अथवा दोनों के अभाव में जगत्-सृष्टि होती है' 'दर्शनों को धर्मानुरोधी होना चाहिये या स्वतन्त्र' 'जीव और ब्रह्म का भेद या अभेद' 'जगत् का मिथ्यात्व' आदि।

## विशिष्टाधिवेशन

१९६० में यह निश्चय हुआ कि इस परिषद् का ऐसा विकास किया जाय कि यह देश के संस्कृत विद्वानों के क्षेत्र में विश्वविख्यात 'अखिल भारतीय दर्शन-परिषद्' या 'अखिल भारतीय प्राच्यविद्यापरिषद्' के समान ही महत्त्वपूर्ण कार्य कर सके। उक्त दोनों परिषदों में अन्तर्बाह्य सभी ओर से अंग्रेजी भाषा का ऐसा दुर्भेद्य वातावरण है कि उसमें संस्कृत हिन्दी आदि भाषाओं का प्रवेश आज भी दुःशक है। संस्कृत साहित्य का विकास और प्राचीन संस्कृत विद्वानों की विचारसरणि भी अन्य लोगों से भिन्न है। इस कारण से भी यह अत्यावश्यक है कि प्राचीन धारा में ही उसकी स्वाभाविक गति के अनुसार ऐसी सुविधा एवं प्रोत्साहन प्रदान किया जाय कि एक ऐसी प्रशस्त आलोचना-प्रणाली का विकास हो, जिससे प्राचीन दर्शनों का पुनः मौलिक एवं स्वाभाविक समीक्षण एवं विकास हो सके और साथ ही अर्वाचीन नवीन दर्शनों के परिचय के द्वारा नवीन मानवीय समस्याओं का भी दार्शनिक समाधान हो सके।

उपर्युक्त नवीन प्रेरणा के आधार पर दर्शन-परिषद् एक विशिष्ट आदर्श की ओर उन्मुख हो रही है। इस आदर्श की पूर्ति के लिये संस्कृत विश्वविद्यालय

उपयुक्ततम स्थान है। प्रायः संम्पूर्ण संस्कृत वाङ्मय का साक्षात् या परम्परया दर्शन से सम्बन्ध है, और वह आध्यात्मिक विचारों से ओत प्रोत है। इसलिये इस परिषद् को एकमात्र विश्वविद्यालय के दर्शन के विभागों से ही सम्बद्ध न रख कर विश्वविद्यालयीय आधार पर उसे संघटित किया गया है। यह निश्चय किया गया कि इस विश्वविद्यालय में इसका ऐसा क्रमिक विकास होना चाहिए कि इसके द्वारा उत्तरोत्तर अधिकाधिक विद्याओं का एवं विद्वानों का संग्रह होता जाय। इस दिशा में प्रगति की दृष्टि से जनवरी १९६० ई० में परिषद् का एक अधिवेशन करने का आयोजन किया। यह अधिवेशन तीन दिनों में (१७,१८, १९ जनवरी १९६१ ई०) संपन्न हुआ। इस प्रकार अधिवेशन का आयोजन भी इस परिषद् का विशिष्ट उद्देश्य बन गया है।

उक्त अधिवेशन के प्रधान सभापति डा० सम्पूर्णानन्द थे और वेदान्त, न्याय, बौद्धदर्शन तथा शैवागम परिषदोंके क्रमशः निम्नलिखित अध्यक्ष थे— श्री रघुनाथ शर्मा, म० म० कालीपद तर्काचार्य, डा० सातकरी मुकर्जी तथा डा० कान्तिचन्द्र पाण्डेय। इसी प्रकार १९६२ ई० में अधिवेशन के प्रधान सभापति प्रो० को० अ० सुब्रह्मण्य अय्यर थे और व्याकरण दर्शन, मीमांसा, वैष्णव दर्शन, अद्वैतदर्शन, प्राच्यप्रतीच्य दर्शन-समीक्षा तथा न्यायदर्शन इन ६ परिषदों के निम्नलिखित अध्यक्ष थे—पण्डित कालीप्रसाद मिश्र, रामचन्द्र शास्त्री, नरसिंहाचार्य, रामचन्द्र शास्त्री दीक्षित, डा० सातकरी मुखर्जी तथा पण्डित राजेश्वर शास्त्री। इस प्रकार अधिवेशनों, परिषदों और गोष्ठियों में शताधिक निबन्ध पढ़े गये। इन सभी निबन्धों का प्रकाशन 'सारस्वती सुषमा' के विशिष्ट या सामान्य अङ्कों में हुआ।

१९६७ ई० में निम्नलिखित ६ परिषदों तथा अनेक अन्य गोष्ठियों के साथ अधिवेशन आयोजित है। सन्त जीवन-दर्शन, वेदान्तदर्शन, जैनदर्शन, न्यायदर्शन, प्राच्यप्रतीच्यदर्शन-समीक्षा तथा बौद्ध दर्शनों की ६ परिषदें होंगी। इनमें देश के सभी भागों के विद्वान् भाग लेंगे।

## निबन्ध

अधिवेशन में अनेकानेक दर्शन गोष्ठियाँ होती हैं, जिनमें विद्वानों की गवेषणा और आलोचनापूर्ण निबन्धों का पाठ होता है और वे 'सारस्वती सुषमा' में प्रकाशित होते हैं। अधिवेशन की गोष्ठियों के अतिरिक्त, समय समय पर अन्य विविध प्रकार की भी दर्शन-गोष्ठियां होंगी, जिनमें निबन्ध-पाठ एवं भाषणादि होंगे।

निबन्ध के लिए सभी दार्शनिक विषय स्वीकृत हैं, किन्तु विशेषतः जिन दर्शनों के अध्ययनाध्यापन की परम्परा विलुप्त हो गयी है, या विरल हो गयी है; उनके अध्ययन को पुनरुज्जीवित करने के लिए या विकसित करने के लिए तत्सम्बन्धी गवेषणात्मक एवं परिचयात्मक निबन्ध स्वीकृत होंगे। प्रचलित दर्शनों या विषयों के केवल वैसे ही निबन्ध प्रोत्साहनीय होंगे जो उत्कृष्ट कोटि के आलोचनात्मक हों। भारतीय दर्शनों के परस्पर तुलनात्मक अध्ययन से पूर्ण अथवा अन्य प्राच्य तथा पाश्चात्य दर्शनों के साथ तुलनात्मक अध्ययन से पूर्ण निबन्ध विशेषतः प्रोत्साहनीय होंगे।

निबन्धों के लिए स्वीकृत भाषा—संस्कृत पालि प्राकृत और हिन्दी (हिन्दी-अपभ्रंश आदि से सम्बन्वित विषयों के लिये) निश्चित है। अन्य भाषाओं में लिखे निबन्ध भी स्वीकृत होंगे। विदेशी भाषाओं में लिखे गये निबन्धों का कवल अंग्रेजी या हिन्दी रूपान्तर ही स्वीकृत होगा। सभी प्रकार के निबन्ध मूल संस्कृत में या अनूदित संस्कृत में प्रकाशित होंगे। पालि, प्राकृत तथा हिन्दी निबन्धों का भी मूल रूप प्रकाशित होगा। अस्वीकृत निबन्ध लेखकों को लौटा दिये जायेगें।

## भाषण

विशिष्ट विद्वानों के भाषण भी होंगे, जिनकी भाषा संस्कृत या हिन्दी होगी। अन्य भाषाविदों के भी भाषण होगें, उनके हिन्दी या संस्कृत अनुवाद का प्रबन्ध होगा।

## निवेदन

परिषद् के उपर्युक्त उद्देश्यों की सिद्धि विद्वानों के सहयोग पर ही निर्भर है। आजकल की प्रचलित संस्कृत-शिक्षा-प्रणाली में निवन्धादि लिखने का अभ्यास विरल हो गया है। विद्वद्वर्ग भी इस ओर विशेष रुचि नहीं लेता, किन्तु विद्या में नवीन विचारों की वृद्धि की दृष्टि से तथा प्राचीन विचारों के गंभीर ज्ञान की दृष्टि से निबन्धादि के द्वारा शास्त्रों का सम्यक् आलोचन अत्यन्त अपेक्षित है। दर्शनपरिषद् इस सत्प्रवृत्ति के उज्जीवन में तब निमित्त हो सकती है, जब विद्वद्वर्ग अपने निबन्धादि से परिषद् के समारोहों को सफल करे। अतः विद्वद्वर्ग से सविनय निवेदन है कि वे समय समय पर अपने निबन्धादि से हमलोगों को उपकृत करते रहें।

—:o:—

